॥ ॐमुकुन्दमालास्तोत्रम् कुलशेखरविरचितम् संस्करण् १ अथवा २ ॥

संस्करण् - १ श्लोक संख्या ४०

श्रीवल्लभेति वरदेति दयापरेति
भक्तप्रियेति भवलुण्ठनकोविदेति ।
नाथेति नागशयनेति जगन्निवासेत्य्
आलापिनं प्रतिदिनं कुरु मां मुकुन्द ॥ १॥

जयतु जयतु देवो देवकीनन्दनोऽयं
जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ २॥॥ का २॥

मुकुन्द मूर्ध्ना प्रणिपत्य याचे
भवन्तमेकान्तमियन्तमर्थम् ।
अविस्मृतिस्त्वच्चरणारविन्दे
भवे भवे मेऽस्तु भवत्प्रसादात् ॥ ३॥॥ का ३॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम् ।
रम्यारामामृदुतनुलता नन्दने नापि रन्तुं
भावे भावे हृदयभवने भावयेयं भवन्तम् ॥ ४॥॥ का ५॥

नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद् भाव्यं तद् भवतु भगवन्पूर्वकर्मानुरूपम् ।
एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि
त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥ ५॥॥ का ६॥

दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक प्रकामम् ।
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि ॥ ६॥॥ का ७॥

कृष्ण त्वदीयपदपङ्कजपञ्जरान्तं
अद्यैव मे विशतु मानसराजहंसः ।
प्राणप्रयाणसमये कफवातपित्तैः
कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥ ७॥

चिन्तयामि हरिमेव सन्ततं
मन्दहासमुदिताननाम्बुजं
नन्दगोपतनयं परात् परं
नारदादिमुनिवृन्दवन्दितम् ॥ ८॥

करचरणसरोजे कान्तिमन्नेत्रमीने
श्रममुषि भुजवीचिव्याकुलेऽगाधमार्गे ।
हरिसरसि विगाह्यापीय तेजोजलौघं
भवमरुपरिखिन्नः क्लेशमद्य त्यजामि ॥ ९॥

सरसिजनयने सशङ्खचक्रे
मुरभिदि मा विरमस्व चित्त रन्तुम् । var विरमेह
सुखतरमपरं न जातु जाने var सुखकर
हरिचरणस्मरणामृतेन तुल्यम् ॥ १०॥॥ का ८॥

माभीर्मन्दमनो विचिन्त्य बहुधा यामीश्चिरं यातनाः var माभैर्मन्दमनो
नामी नः प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ ११॥॥ का ९॥

भवजलधिगतानां द्वन्द्ववाताहतानां
सुतदुहितृकलत्रत्राणभारार्दितानाम् ।
विषमविषयतोये मज्जतामप्लवानां
भवतु शरणमेको विष्णुपोतो नराणाम् ॥ १२॥

भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मा स्म गाः कातरत्वम् ।
सरसिजदृशि देवे तारकी भक्तिरेका var तावकी
नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ १३॥॥ का १०॥

तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले
दारावर्ते तनयसहजग्राहसङ्घाकुले च ।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्
पादाम्भोजे वरद भवतो भक्तिनावं प्रयच्छ ॥ १४॥॥ का ११॥

माद्राक्षं क्षीणपुण्यान्क्षणमपि भवतो भक्तिहीनान्पदाब्जे
माश्रौषं श्राव्यबन्धं तव चरितमपास्यान्यदाख्यानजातम् । var श्राव्यबद्धं

मास्मार्षं माधव त्वामपि भुवनपते चेतसापह्नुवानान्   var  मास्प्राक्षं
माभूवं त्वत्सपर्यापरिकररहितो जन्मजन्मान्तरेऽपि ॥ १५॥॥ का २३॥   var
त्वत्सपर्याव्यतिकररहितो

जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं
पाणिद्वन्द्व समर्चयाच्युतकथाः श्रोत्रद्वय त्वं शृणु ।
कृष्णं लोकय लोचनद्वय हरेर्गच्छाङ्घ्रियुग्मालयं
जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन् नमाधोक्षजम् ॥ १६॥॥ का २६॥

हे लोकाः श्रुणुत प्रसूतिमरणव्याधेश्चिकित्सामिमां   var  भो लोकाः
योगज्ञाः समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः ।
अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयतां
तत्पीतं परमौषधं वितनुते निर्वानमत्यन्तिकम् ॥ १७॥॥ का १८॥   var  यत्पितं

हे मर्त्याः परमं हितं श्रुणुत वो वक्ष्यामि सङ्क्षेपतः
संसारार्णवमापदूर्मिबहुलं सम्यक् प्रविश्य स्थिताः ।
नानाज्ञानमपास्य चेतसि नमो नारायणायेत्यमुं
मन्त्रं सप्रणवं प्रणामसहितं प्रावर्तयध्वं मुहुः ॥ १८॥

पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुस्फुलिङ्गोऽनल -
स्तेजो निःश्वसनं मरुत् तनुतरं रन्ध्रं सुसूक्ष्मं नभः ।
क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा
दृष्टे यत्र स तावको विजयते भूमावधूतावधिः ॥ १९॥॥ का १२॥

बद्धेनाञ्जलिना नतेन शिरसा गात्रैः सरोमोद्गमैः
कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना ।
नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिनां
अस्माकं सरसीरुहाक्ष सततं सम्पद्यतां जीवितम् ॥ २०॥॥ का १९॥

हे गोपालक हे कृपाजलनिधे हे सिन्धुकन्यापते
हे कंसान्तक हे गजेन्द्रकरुणापारीण हे माधव ।
हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष मां
हे गोपीजननाथ पालय परं जानामि न त्वां विना ॥ २१॥

भक्तापायभुजङ्गगारुडमणिस्त्रैलोक्यरक्षामणिर्   var  भक्ताद्वेषि
गोपीलोचनचातकाम्बुदमणिः सौन्दर्यमुद्रामणिः
यः कान्तामणिरुक्मिणीघनकुचद्वन्द्वैकभूषामणिः   var  श्री कान्ता
श्रेयो देवशिखामणिर्दिशतु नो गोपालचूडामणिः ॥ २२॥॥ का २८॥   var  श्रेयो ध्येय

शत्रुच्छेदैकमन्त्रं सकलमुपनिषद्वाक्यसम्पूज्यमन्त्रं
संसारोत्तारमन्त्रं समुचिततमसः सङ्घनिर्याणमन्त्रम् । var समुदितमनसां
सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसन्दष्टसन्त्राणमन्त्रं
जिह्वे श्रीकृष्णमन्त्रं जप जप सततं जन्मसाफल्यमन्त्रम् ॥ २३॥॥ का २९ ॥

व्यामोहप्रशमौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं var
व्यामोहोद्दलनौषधं
दैत्येन्द्रार्तिकरौषधं त्रिजगतां सञ्जीवनैकौषधम् । var
दैत्यानर्थकरौषधं
भक्तात्यन्तहितौषधं भवभयप्रध्वंसनैकौषधं var
भक्तार्तिप्रशमौषधं भवभयप्रध्वंसि दिव्यौषधं
श्रेयःप्राप्तिकरौषधं पिब मनः श्रीकृष्णदिव्यौषधम् ॥ २४॥॥ का ३० ॥ var
श्रीकृष्णनामौषधम्

आम्नायाभ्यसनान्यरण्यरुदितं वेदव्रतान्यन्वहं var कृच्छ्रव्रतान्यन्वहं
मेदश्छेदफलानि पूर्तविधयः सर्वं हुतं भस्मनि । var मेदच्छेदपदानि
तीर्थानामवगाहनानि च गजस्नानं विना यत्पद -
द्वन्द्वाम्भोरुहसंस्मृतिं विजयते देवः स नारायणः ॥ २५॥॥ का १३॥ var
द्वन्द्वाम्भोरुहसंस्तुतिं

श्रीमन्नाम प्रोच्य नारायणाख्यं
केन प्रापुर्वाञ्छितं पापिनोऽपि । var येन
हा नः पूर्वं वाक्प्रवृत्ता न तस्मिं -
स्तेन प्राप्तं गर्भवासादिदुःखम् ॥ २६॥॥ का २२॥

मज्जन्मनः फलमिदं मधुकैटभारे
मत्प्रार्थनीयमदनुग्रह एष एव ।
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्य-
भृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥ २७॥

नाथे नःपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा var श्रीपुरुषोत्तमे
सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति ।
यं कञ्चित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ २८॥॥ का १७॥

मदन परिहर स्थितिं मदीये
मनसि मुकुन्दपदारविन्दधाम्नि ।

हरनयनकृशानुना कृशोऽसि
स्मरसि न चक्रपराक्रमं मुरारेः ॥ २९॥॥ का २४॥

तत्त्वं ब्रुवाणानि परं परस्तान्  var  परस्मात्
मधु क्षरन्तीव मुदावहानि ।  var  अहो क्षरन्तीव सुधां पदानि ।
प्रवर्तय प्राञ्जलिरस्मि जिह्वे  var  आवर्तय
नामानि नारायणगोचराणि ॥ ३०॥॥ का २०॥

इदं शरीरं परिणामपेशलं  var  श्लथसन्धिजर्जरं
पतत्यवश्यं परिणामपेशलम् ।  var  पतत्यवश्यं श्लथसंधि जर्जरम् ।
किमौषधैः क्लिश्यसि मूढ दुर्मते
निरामयं कृष्णरसायनं पिब ॥ ३१॥॥ का २१॥

दारा वाराकरवरसुता ते तनूजो विरिञ्चिः  var  तेऽङ्गजोऽयं
स्तोता वेदस्तव सुरगणो भृत्यवर्गः प्रसादः ।
मुक्तिर्माया जगद् अविकलं तावकी देवकी ते  var  मुक्तिर्मध्ये
माता मित्रं बलरिपुसुतस्तत्त्वदन्यंन जाने ॥ ३२॥॥ का २५॥  var
बलरिपुसुतस्तत्त्वतोऽन्यन्न

कृष्णो रक्षतु नो जगत्त्रयगुरुः कृष्णं नमध्वं सदा
कृष्णेनाखिलशत्रवो विनिहताः कृष्णाय तस्मै नमः ।
कृष्णादेव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहं
कृष्णे तिष्ठति विश्वमेतद् अखिलं हे! कृष्ण रक्षस्व माम् ॥ ३३॥

तत् त्वं प्रसीद भगवन् कुरु मय्यनाथे
विष्णो कृपां परमकारुणिकः खलु त्वम् ।
संसारसागरनिमग्नमनन्त दीनं
उद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥ ३४॥

नमामि नारायणपादपङ्कजं
करोमि नारायणपूजनं सदा ।
वदामि नारायणनाम निर्मलं
स्मरामि नारायणतत्त्वमव्ययम् ॥ ३५॥

श्रीनाथ नारायण वासुदेव
श्रीकृष्ण भक्तप्रिय चक्रपाणे ।
श्रीपद्मनाभाच्युत कैटभारे
श्रीराम पद्माक्ष हरे मुरारे ॥ ३६॥

अनन्त वैकुण्ठ मुकुन्द कृष्ण   var  आनन्द गोविन्द मुकुन्द राम
गोविन्द दामोदर माधवेति ।   var  नारायणानन्त निरामयेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चित्
अहो जनानां व्यसनाभिमुख्यम् ॥ ३७॥  ॥ का १४ ॥  var  व्यसनानिमोक्षे

ध्यायन्ति ये विष्णुमनन्तमव्ययं
हृत्पद्ममध्ये सततं व्यवस्थितम् ।
समाहितानां सतताभयप्रदं
ते यान्ति सिद्धिं परमां तु वैष्णवीम् ॥ ३८॥

क्षीरसागरतरङ्गशीकरा -
सारतारकितचारुमूर्तये ।
भोगिभोगशयनीयशायिने
माधवाय मधुविद्विषे नमः ॥ ३९॥  ॥ का १५॥

यस्य प्रियौ श्रुतिधरौ कविलोकवीरौ    var  कविलोकगीतौ
मित्रे द्विजन्मवरपद्मशरावभूताम् ।    var  द्विजन्मपरिवारशिवावभूताम् ।
तेनाम्बुजाक्षचरणाम्बुजषट्पदेन
राज्ञा कृता कृतिरियं कुलशेखरेण ॥ ४०॥॥ का ३४॥    var  स्तुतिरियं

॥ इति श्रीकुलशेखरेण विरचिता मुकुन्दमाला सम्पूर्णा ॥

संस्करण् - २ श्लोक संख्या ५४

वन्दे मुकुन्दमरविन्ददलायताक्षं
कुन्देन्दुशङ्खदशनं शिशुगोपवेषम् ।
इन्द्रादिदेवगणवन्दितपादपीठं
वृन्दावनालयमहं वसुदेवसूनुम् ॥ १॥॥ का १॥

श्रीवल्लभेति वरदेति दयापरेति
भक्तप्रियेति भवलुण्ठनकोविदेति ।
नाथेति नागशयनेति जगन्निवासेत्य्
आलापिनं प्रतिदिनं कुरु मां मुकुन्द ॥ २॥॥ का ??॥

जयतु जयतु देवो देवकीनन्दनोऽयं

जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ ३॥॥ का २॥

मुकुन्द मूर्ध्ना प्रणिपत्य याचे
भवन्तमेकान्तमियन्तमर्थम् ।
अविस्मृतिस्त्वच्चरणारविन्दे
भवे भवे मेऽस्तु भवत्प्रसादात् ॥ ४॥॥ का ३॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम् ।
रम्यारामामृदुतनुलता नन्दने नापि रन्तुं
भावे भावे हृदयभवने भावयेयं भवन्तम् ॥ ५॥॥ का ५॥

नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद् भाव्यं तद् भवतु भगवन्पूर्वकर्मानुरूपम् ।
एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि
त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥ ६॥॥ का ६॥

दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक प्रकामम् ।
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि ॥ ७॥॥ का ७॥

चिन्तयामि हरिमेव सन्ततं
मन्दहासमुदिताननाम्बुजं
नन्दगोपतनयं परात् परं
नारदादिमुनिवृन्दवन्दितम् ॥ ८॥॥ का ??॥

करचरणसरोजे कान्तिमन्नेत्रमीने
श्रममुषि भुजवीचिव्याकुलेऽगाधमार्गे ।
हरिसरसि विगाह्यापीय तेजोजलौघं
भवमरुपरिखिन्नः क्लेशमद्य त्यजामि ॥ ९॥॥ का ??॥

सरसिजनयने सशङ्खचक्रे
मुरभिदि मा विरमस्व चित्त रन्तुम् । var विरमेह
सुखतरमपरं न जातु जाने var सुखकर
हरिचरणस्मरणामृतेन तुल्यम् ॥ १०॥॥ का ८॥

माभीर्मन्दमनो विचिन्त्य बहुधा यामीश्चिरं यातनाः  var  माभैर्मन्दमनो
नामी नः प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ ११॥॥ का ९॥

भवजलधिगतानां द्वन्द्ववाताहतानां
सुतदुहितृकलत्रत्राणभारार्दितानाम् ।
विषमविषयतोये मज्जतामप्लवानां
भवतु शरणमेको विष्णुपोतो नराणाम् ॥ १२॥

भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मा स्म गाः कातरत्वम् ।
सरसिजदृशि देवे तारकी भक्तिरेका var  तावकी
नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ १३॥॥ का १०॥

तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले
दारावर्ते तनयसहजग्राहसङ्घाकुले च ।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन्
पादाम्भोजे वरद भवतो भक्तिनावं प्रयच्छ ॥ १४॥॥ का ११॥

पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुस्फुलिङ्गोऽनल -
स्तेजो निःश्वसनं मरुत् तनुतरं रन्ध्रं सुसूक्ष्मं नभः ।
क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा
दृष्टे यत्र स तावको विजयते भूमावधूतावधिः ॥ १५॥॥ का १२॥

हे लोकाः श्रुणुत प्रसूतिमरणव्याधेश्चिकित्सामिमां  var  भो लोकाः
योगज्ञाः समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः ।
अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयतां
तत्पीतं परमौषधं वितनुते निर्वानमत्यन्तिकम् ॥ १६॥॥ का १८॥  var  यत्पितं

हे मर्त्याः परमं हितं श्रुणुत वो वक्ष्यामि सङ्क्षेपतः
संसारार्णवमापदूर्मिबहुलं सम्यक् प्रविश्य स्थिताः ।
नानाज्ञानमपास्य चेतसि नमो नारायणायेत्यमुं
मन्त्रं सप्रणवं प्रणामसहितं प्रावर्तयध्वं मुहुः ॥ १७॥

नाथे नःपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा var  श्रीपुरुषोत्तमे
सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति ।

यं कञ्चित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ १८॥॥ का १७॥

बद्धेनाञ्जलिना नतेन शिरसा गात्रैः सरोमोद्गमैः
कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना ।
नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिनां
अस्माकं सरसीरुहाक्ष सततं सम्पद्यतां जीवितम् ॥ १९॥॥ का १९॥

यत् कृष्णप्रणिपातधूलिधवलं तद् वर्ष्म तद् वै शिरस्  var  तद्वै शिरः स्याच्छुभं
ते नेत्रे तमसोज्झिते सुरुचिरे याभ्यां हरिर्दृश्यते ।
सा बुद्धिर्विमलेन्दुशङ्खधवला या माधवाध्यायिनी  var  बुद्धिर्नियमैर्यमैश्च विमला
सा जिह्वामृतवर्षिणी प्रतिपदं या स्तौति नारायणम् ॥ २०॥॥ का २७॥

जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं
पाणिद्वन्द्व समर्चयाच्युतकथाः श्रोत्रद्वय त्वं शृणु ।
कृष्णं लोकय लोचनद्वय हरेर्गच्छाङ्घ्रियुग्मालयं
जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन् नमाधोक्षजम् ॥ २१॥॥ का २६॥

आम्नायाभ्यसनान्यरण्यरुदितं वेदव्रतान्यन्वहं  var  कृच्छ्रव्रतान्यन्वहं
मेदश्छेदफलानि पूर्तविधयः सर्वं हुतं भस्मनि ।  var  मेदच्छेदपदानि
तीर्थानामवगाहनानि च गजस्नानं विना यत्पद -
द्वन्द्वाम्भोरुहसंस्मृतिं विजयते देवः स नारायणः ॥ २२॥॥ का १३॥  var
द्वन्द्वाम्भोरुहसंस्तुतिं

मदन परिहर स्थितिं मदीये
मनसि मुकुन्दपदारविन्दधाम्नि ।
हरनयनकृशानुना कृशोऽसि
स्मरसि न चक्रपराक्रमं मुरारेः ॥ २३॥॥ का २४॥

नाथे धातरि भोगिभोगशयने नारायणे माधवे
देवे देवकिनन्दने सुरवरे चक्रायुधे शार्ङ्गिणि ।
लीलाशेषजगत्प्रपञ्चजठरे विश्वेश्वरे श्रीधरे
गोविन्दे कुरु चित्तवृत्तिमचलामन्यैस्तु किं वर्तनैः ॥ २४॥

माद्राक्षं क्षीणपुण्यान्क्षणमपि भवतो भक्तिहीनान्पदाब्जे
माश्रौषं श्राव्यबन्धं तव चरितमपास्यान्यदाख्यानजातम् ।  var  श्राव्यबद्धं
मास्मार्षं माधव त्वामपि भुवनपते चेतसापह्नुवानान्  var  मास्प्राक्षं
माभूवं त्वत्सपर्यापरिकररहितो जन्मजन्मान्तरेऽपि ॥ २५॥॥ का २३॥  var

त्वत्सपर्याव्यतिकररहितो

मज्जन्मनः फलमिदं मधुकैटभारे
मत्प्रार्थनीयमदनुग्रह एष एव ।
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्य-
भृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥ २६॥

तत्त्वं ब्रुवाणानि परं परस्तान्   var  परस्मात्
मधु क्षरन्तीव मुदावहानि ।   var  अहो क्षरन्तीव सुधां पदानि ।
प्रवर्तय प्राञ्जलिरस्मि जिह्वे   var  आवर्तय
नामानि नारायणगोचराणि ॥ २७॥ ॥ का २०॥

नमामि नारायणपादपङ्कजं
करोमि नारायणपूजनं सदा ।
वदामि नारायणनाम निर्मलं
स्मरामि नारायणतत्त्वमव्ययम् ॥ २८॥

श्रीनाथ नारायण वासुदेव
श्रीकृष्ण भक्तप्रिय चक्रपाणे ।
श्रीपद्मनाभाच्युत कैटभारे
श्रीराम पद्माक्ष हरे मुरारे ॥ २९॥

अनन्त वैकुण्ठ मुकुन्द कृष्ण   var  आनन्द गोविन्द मुकुन्द राम
गोविन्द दामोदर माधवेति ।   var  नारायणानन्त निरामयेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चित्
अहो जनानां व्यसनाभिमुख्यम् ॥ ३०॥  ॥ का १४ ॥  var  व्यसनानिमोक्षे

भक्तापायभुजङ्गगारुडमणिस्त्रैलोक्यरक्षामणिर्   var  भक्ताद्वेषि
गोपीलोचनचातकाम्बुदमणिः सौन्दर्यमुद्रामणिः
यः कान्तामणिरुक्मिणीघनकुचद्वन्द्वैकभूषामणिः   var  श्री कान्ता
श्रेयो देवशिखामणिर्दिशतु नो गोपालचूडामणिः ॥ ३१॥ ॥ का २८॥   var  श्रेयो ध्येय

शत्रुच्छेदैकमन्त्रं सकलमुपनिषद्वाक्यसम्पूज्यमन्त्रं
संसारोत्तारमन्त्रं समुचिततमसः सङ्घनिर्याणमन्त्रम् ।   var  समुदितमनसां
सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसन्दष्टसन्त्राणमन्त्रं
जिह्वे श्रीकृष्णमन्त्रं जप जप सततं जन्मसाफल्यमन्त्रम् ॥ ३२॥ ॥ का २९ ॥

व्यामोहप्रशमौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं   var

व्यामोहोद्दलनौषधं
दैत्येन्द्रार्तिकरौषधं त्रिजगतां सञ्जीवनैकौषधम् । var
दैत्यानर्थकरौषधं
भक्तात्यन्तहितौषधं भवभयप्रध्वंसनैकौषधं var
भक्तार्तिप्रशमौषधं भवभयप्रध्वंसि दिव्यौषधं
श्रेयःप्राप्तिकरौषधं पिब मनः श्रीकृष्णदिव्यौषधम् ॥ ३३॥॥ का ३० ॥ var
श्रीकृष्णनामौषधम्

कृष्ण त्वदीयपदपङ्कजपञ्जरान्तं
अद्यैव मे विशतु मानसराजहंसः ।
प्राणप्रयाणसमये कफवातपित्तैः
कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥ ३४॥

चेतश्चिन्तय कीर्तयस्व रसने नम्रीभव त्वं शिरो
हस्तावञ्जलिसम्पुटं रचयतं वन्दस्व दीर्घं वपुः ।
आत्मन् संश्रय पुण्डरीकनयनं नागाचलेन्द्रस्थितं
धन्यं पुण्यतमं तदेव परमं दैवं हि संसिद्धये ॥ ३५॥

शृण्वन् जनार्दनकथागुणकीर्तनानि
देहे न यस्य पुलकोद्गमरोमराजिः ।
नोत्पद्यते नयनयोर्विमलाम्बुमाला
धिक् तस्य जीवितमहो पुरुषाधमस्य ॥ ३६॥

अन्धस्य मे हृतविवेकमहाधनस्य
चौरैः प्रभो बलिभिरिन्द्रियनामधेयैः ।
मोहान्धकूपकुहरे विनिपातितस्य
देवेश देहि कृपणस्य करावलम्बम् ॥ ३७॥

इदं शरीरं परिणामपेशलं var श्लथसन्धिजर्जरं
पतत्यवश्यं परिणामपेशलम् । var पतत्यवश्यं श्लथसंधि जर्जरम् ।
किमौषधैः क्लिश्यसि मूढ दुर्मते
निरामयं कृष्णरसायनं पिब ॥ ३८॥॥ का २१॥

आश्चर्यमेतद् धि मनुष्यलोके
सुधां परित्यज्य विषं पिबन्ति ।
नामानि नारायणगोचराणि
त्यक्त्वान्यवाचः कुहकाः पठन्ति ॥ ३९॥॥ का ३१ ॥

त्यजन्तु बान्धवाः सर्वे
निन्दन्तु गुरवो जनाः ।
तथापि परमानन्दो
गोविन्दो मम जीवनम्ः ॥ ४०॥

सत्यं ब्रवीमि मनुजाः स्वयमूर्ध्वबाहुर्
यो यो मुकुन्द नरसिंह जनार्दनेति ।
जीवो जपत्यनुदिनं मरणे रणे वा
पाषाणकाष्ठसदृशाय ददात्यभीष्टम् ॥ ४१॥

नारायणाय नम इत्यमुमेव मन्त्रं
संसारघोरविषनिर्हरणाय नित्यम् ।
शृण्वन्तु भव्यमतयो यतयोऽनुरागाद्
उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः ॥ ४२॥

चित्तं नैव निवर्तते क्षणमपि श्रीकृष्णपादाम्बुजा -
न्निन्दन्तु प्रियबान्धवा गुरुजना गृह्णन्तु मुञ्चन्तु वा ।
दुर्वादं परिघोषयन्तु मनुजा वंशे कलङ्कोऽस्तु वा
तादृक्प्रेमधरानुरागमधुना मत्ताय मानं तु मे ॥ ४३॥

कृष्णो रक्षतु नो जगत्त्रयगुरुः कृष्णं नमध्वं सदा
कृष्णेनाखिलशत्रवो विनिहताः कृष्णाय तस्मै नमः ।
कृष्णादेव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहं
कृष्णे तिष्ठति विश्वमेतद् अखिलं हे! कृष्ण रक्षस्व माम् ॥ ४४॥

हे गोपालक हे कृपाजलनिधे हे सिन्धुकन्यापते
हे कंसान्तक हे गजेन्द्रकरुणापारीण हे माधव ।
हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष मां
हे गोपीजननाथ पालय परं जानामि न त्वां विना ॥ ४५॥

दारा वाराकरवरसुता ते तनूजो विरिञ्चिः var तेऽङ्गजोऽयं
स्तोता वेदस्तव सुरगणो भृत्यवर्गः प्रसादः ।
मुक्तिर्माया जगद् अविकलं तावकी देवकी ते var मुक्तिर्मध्ये
माता मित्रं बलरिपुसुतस्तत्त्वदन्यंन जाने ॥ ४६॥॥ का २५॥ var
बलरिपुसुतस्तत्त्वतोऽन्यन्न

प्रणाममीशस्य शिरःफलं विदुः
तदर्चनं पाणिफलं दिवौकसः ।

मनःफलं तद्गुणतत्त्वचिन्तनं
वचःफलं तद्गुणकीर्तनं बुधाः ॥ ४७॥

श्रीमन्नाम प्रोच्य नारायणाख्यं
केन प्रापुर्वाञ्छितं पापिनोऽपि ।   var  येन
हा नः पूर्वं वाक्प्रवृत्ता न तस्मिं-
स्तेन प्राप्तं गर्भवासादिदुःखम् ॥ ४८॥॥ का २२॥

ध्यायन्ति ये विष्णुमनन्तमव्ययं
हृत्पद्ममध्ये सततं व्यवस्थितम् ।
समाहितानां सतताभयप्रदं
ते यान्ति सिद्धिं परमां तु वैष्णवीम् ॥ ४९॥

तत् त्वं प्रसीद भगवन् कुरु मय्यनाथे
विष्णो कृपां परमकारुणिकः खलु त्वम् ।
संसारसागरनिमग्नमनन्त दीनं
उद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥ ५०॥

क्षीरसागरतरङ्गशीकरा -
सारतारकितचारुमूर्तये ।
भोगिभोगशयनीयशायिने
माधवाय मधुविद्विषे नमः ॥ ५१॥  ॥ का १५॥

अलमलमलमेका प्राणिनां पातकानां
निरसनविषये या कृष्ण कृष्णेति वाणी ।
यदि भवति मुकुन्दे भक्तिरानन्दसान्द्रा
करतलकलिता सा मोक्षसम्राज्यलक्ष्मीः ॥ ५२॥

यस्य प्रियौ श्रुतिधरौ कविलोकवीरौ    var  कविलोकगीतौ
मित्रे द्विजन्मवरपद्मशरावभूताम् ।    var  द्विजन्मपरिवारशिवावभूताम् ।
तेनाम्बुजाक्षचरणाम्बुजषट्पदेन
राज्ञा कृता कृतिरियं कुलशेखरेण ॥ ५३॥॥ का ३४॥    var  स्तुतिरियं

मुकुन्दमालां पठतां नराणां
अशेषसौख्यं लभते न कः स्वित् ।
समस्तपापक्षयमेत्य देही
प्रयाति विष्णोः परमं पदं तत् ॥ ५४॥

॥ इति श्रीकुलशेखरेण विरचिता मुकुन्दमाला सम्पूर्णा ॥